# KUMMĀPUTTACHARIAM

( Kûrmâputracharitra )

*by*

( Jinamânikya or his pupil Anamtahamsa )

Edited and published with introduction, translation, notes and glossary

*by*

**Professor K. V. Abhyankar, M A.**
Professor of Sanskrit and Ardha-Māgadhī
Gujarat College,
AHMEDABAD

Printed at the
Surya Prakash Printing Press, Gheekanta Road
**Ahmedabad**

First Edition Copies 1000

1931

Price Re. 1-4-0

जिनमाणिक्यसूरिभिः तच्छिष्यैरनन्तहंससूरिभिर्वा प्रणीतं

# कुम्मापुत्तचरिअम् ।

'अहमदाबाद' नगरान्तर्गत 'गुजरात कॉलेज' नाम्नि विद्यालये
संस्कृतार्धमागधीभाषाध्यापकेन

अभ्यंकरोपाह्ववासुदेवतनूजकाशीनाथेन
प्रस्तावनाटिप्पणीसूचीभिराङ्गलभाषानुवादेन च सहितं

संशोधितं प्रकाशितं च ।

प्रथमा आवृत्तिः। प्रतयः १०००





अहमदाबादनगरे
सूर्यप्रकाशमुद्रणालये मुद्रितम् ।

संवत् १९८७ शाके १८५२,
मूल्य १-४-०

# CONTENTS





# Foreword.

I feel much pride and delight in announcing the publication of this book which has been prescribed by the University of Bombay as a text-book in Ardha-Māgadhī As no copies of the book were available, the present edition was undertaken adding a translation, notes and a glossary in English for the sake of the University students The book is also intended to be of use to people interested in the study of Ardha-Māgadhī, and with this aim in view a critical edition utilizing all available manuscript material has been offered

The Kummāputtachariu is a short story or Kathānaka dealing with the life of a Jain Kevali It is written in Prakrit It narrates the life of a Jain Kevali which is like a torch-light to its readers and which would certainly lead them, when properly understood and digested to take at least a step on the path of Spiritual Progress I hope the readers will appreciate the value of the book and give a stimulus for further efforts towards the development of Jain Literature and Philosophy by their warm welcome.

It is a matter of great delight that many societies and individuals are are now coming forward trying to advance the cause of Jain religion and philosophy in a variety of ways The Jain Sahitya Pradarsana held here was an admirable success In view of the increasing number of

students taking Ardha-Māgadhī at the College, recently a very desirable step has been taken by the All India Young Men's Jain Society Sammelan and other bodies who have applied to the University for its introduction at the Matriculation Examination and they are very hopeful that their request will soon be granted and students will have the advantage of studying it in the High Schools

Before closing this short foreword, I feel it necessary to say a few words about Prof K V Abhyankar the editor of the present volume We are indeed very fortunate in having this volume edited by him who I am glad to say had a very distinguished career at the Bombay University in Sanskrit where he won all the available prizes and scholarships for proficiency in Sanskrit He was also the first recipient of the Shivchand Amarchand Talakchand Jain Literature Scholarship which induced him to study Jain Literature and Philosophy and ever since his appointmeut at the Gujarat College in 1913 he has been teaching Jain books in Sanskrit and Ardha-Māgadhī I believe this present volume will receive a warm welcome and give the learned Professor an encouragement to do further work in the field

Jain Co operative Housing Society Ahmedabad

S M Shah
Professor of Mathematics,
Gujarat College Ahmedabad

# प्रास्ताविकं निवेदनम् ।

ग्रन्थप्रकाशने हेतुः ।

१ 'कूर्मापुत्रचरित्र'नाम्नः प्रकरणस्यास्य संशोधनप्रकाशनकर्मणि मम प्रवृत्तेर्मुख्यतः कारणं दुरधिगम्यत्वमेतस्य पुस्तकस्य विश्वविद्यालयपरीक्षार्थमर्धमागधीभाषाया अभ्यासं कुर्वतो विद्यार्थिवर्गस्य। श्रीमद्भिर्हरगोविन्ददासैः संशोध्य प्रकाशितस्यास्य ग्रन्थस्य कतिपयसंवत्सराण्यतीतानि, तस्याधुनापणेषु प्रतयो नोपलभ्यन्ते; महता महता प्रयासेनैवावलोकनार्थं कुतश्चिदेकतरा प्रतिः समुपलब्धुं शक्यते। महतामपि महनीयस्य परमकारुणिकस्य सुमहनीयचरितस्य पुराणकेवलिनः कूर्मापुत्रस्य चरित्रमेतत्तपागच्छीयश्रीहेमविमलशुभगुरुश्रीजिनमाणिक्यशिष्यराजैर्वाचकवृन्दस्य सुखप्रतिबोधार्थमतिसुलभया प्रसादयुक्तया प्राकृतभाषयोपनिबद्धं पुराणहस्तलिखितग्रन्थसमूहेन संमील्य पुनः संशोधितं यदि स्यात्तर्हि न केवलं पिपठिषूणां पुस्तकदौर्लभ्यं दूरीकृतं स्यात्किं तु 'आम्राश्च सिक्ताः पितरश्च प्रीणिताः' इति न्यायेन 'दानादिचतुष्प्रकारके धर्मे भाव एव महाप्रभावतया प्रधानः' इत्यर्थप्रतिपादकस्यास्य ग्रन्थस्य पठनात्समुत्पन्नेन मतिसंस्कारेणापरे पुर्वाचकवृन्दस्य सौकर्येण भावसंशुद्धिरपीयत्समासादिता स्यादिति द्वितीयो हेतुर्मुद्रितस्यापि पुनः संशोध्यैतस्मिन्मुद्रणारम्भणकर्मणि ॥

हस्तलिखितादर्शपुस्तकेषु लब्धानि पाठान्तराणि ।

२ जिनसंप्रदायकेन्द्रतया स्थितस्य तत्तत्स्थानस्थितसुविपुलज्ञानभाण्डारस्य गुर्जरदेशस्यास्य पट्टनगरभूते राजनगरेऽस्मिन् कृतालयस्य ममैतद्ग्रन्थसंशोधनकर्मणि हस्तलिखितपुस्तकानामधिगमो विद्यौदार्यस्नेहादिगुणाङ्कितानां सुहृदां परमादरभक्तियुतानां च शिष्यवृन्दानां साहाय्येन नातिमहता प्रयत्नेन स्यादिति मनसि विचार्य ग्रन्थसंशोधनं समारब्धम-

तोऽत्यल्पप्रयासेनैव नूनं तत्तत्स्थानस्थितानि पुस्तकान्यवलोकनार्थं समुपस्थितानि,प्रतिदिनं च नवनवानि समुपतिष्ठन्ति। वेलाया अभावादेव केवलं न सर्वेभ्य सकाशात्पाठान्तराणि सग्रहीतुं शक्यन्ते, न वा भिन्नभिन्नस्थानागतेभ्यो दशभ्यो हस्तलिखितपुस्तकेभ्य. पाठसग्रहे कृते इतरेषां सकाशात्सग्रहो बहूपयुज्येत। ग्रन्थकारकालीनेभ्यो हस्तलिखितपुस्तकेभ्य इतरेभ्यश्च नात्यर्वाचीनेभ्य. पञ्चपेभ्योर्वाचीनेभ्यो द्वित्रेभ्यश्च समुद्धृतानां पाठान्तराणां साकल्येन संग्राहित्वात्सुपर्याप्त च मेदनिदर्शकत्वाद्नवलोकितेषु हस्तलिखितपुस्तकेषु नातःपरमधिकतराणि समुपयोगीनि पाठान्तराण्युर्वरीतानीति पञ्चपादर्शप्रतीनां पाठसंग्रहानन्तरं क्रियमाणेन अनुर्वरीताधिकपाठान्तरतया सुसमालब्धसौलभ्येन सशोधनकर्मणः नितरां निदर्शनपथमागतम्। विशेषतश्चात्रत्य'देहला'उपाश्रयाधिगतेभ्य. 'च छ ज' सञ्ज्ञितेभ्यो लिखितपुस्तकेभ्यस्तथा साकल्येनाधिगतानि उपयुक्तपाठान्तराणि यथा लेखकप्रमादाल्पत्वाद् ग्रन्थकर्तृकालीनप्रायत्वाच्चैषां पुस्तकानामेतत्साहाय्येन परिष्कृतो मुख्यत एतत्पुस्तकोद्धृतत्वेन सशोध्यार्पितोय ग्रन्थो ग्रन्थकृल्लिखितप्राय एव स्यादिति विनिश्चयाय नून मतिः प्रवर्तते॥

आदर्शपुस्तकवर्णनम्।

३ ग्रन्थस्यास्य परिशोधनकर्मणि मतिं तन्वानानां आदर्शपुस्तकनिरीक्षणानन्तर सुविशद निदर्शनपथमवतरेद्यन्मौलिकतया विभिन्नानां पाठानां प्रायशोल्पत्वेन समानत्वेन च सर्वेषां लेखनपद्धत्या सर्वेषामपि सगृहीतानामादर्शपुस्तकानामेकमेव कुलमेक एव च सम्प्रदाय. । अवलोकितेभ्य आदर्शपुस्तकेभ्यः पाठभेदोद्धरणकर्मणि लेखकानां प्रमादवशेन संस्कृतप्राकृतभाषयोः परिचयराहित्येन वा सजातानि तथा च सकारवकारस्थाने शकार-

यकारादिपठनरूपदेशलोकरूढिवशादुद्गतानि समवलोक्यमानान्यपि पाठान्तराणि नात्र संशोधनकर्मणि दत्तादराणि, अतिबाहुल्यात्संख्याया अयत्नपत्वाच्च संशोधनकर्मण्युपयुक्ततायाः एतेषां लेखकप्रमादसमुद्भूतकेवलवर्णमात्रापदभ्रंशाधिक्यमूलानां प्रमादप्रायाणां पाठभेदनामधारिणामेषां पाठभेदानाम्। तथा च नकारस्थाने णकारपठनमुदवृत्तात्स्वरात्प्राग्यकारपठनं च नात्र पाठोद्धरणकर्मणि सुविमर्शितं, प्राकृतकवीनां हस्तलिखितपुस्तकपाठकानां चात्र वस्तुनि द्विधापि प्रवृत्तेर्दृष्टचरत्वात्। तत्तदादर्शपुस्तकसकाशात्संगृहीतानां पाठान्तराणां प्रयत्नकृतमीषत्परीक्षणमेव निदर्शनपथमवतार्येयदधिगतादर्शपुस्तकेषु मध्ये प्राचीनतमयोः प्रायो ग्रन्थकर्तृसमयलिखितयोः 'च ज' पुस्तकयोः पाठा एव प्रामाणिकतमा इति। एतेनैव हेतुना लेखनप्रमादपरित्यागपूर्वकं 'च ज' पुस्तकपाठ एव स्वीकृतोस्माभिरस्मिन्संशोधनकर्मणि। यद्प्यादर्शपुस्तकेषु सद्भाव एव पाठस्य स्वीकरणे हेतुरिति कुत्रचित्कैश्चित्संशोधकैरङ्गीकृतं तत्वं तु नोपयुज्यते प्रस्तुतग्रन्थसंशोधनकर्मणि, समकालीनत्वाभावात्सर्वेषामुपलब्धादर्शग्रन्थानां, ग्रन्थकर्त्रा च समं समानकालीनत्वात्पुराणतमयोर्द्वयोः पुस्तकयोः॥

४ आदर्शपुस्तकानां समयादिपरीक्षणम्। एतत्पुस्तकसंशोधनकर्मण्युपयुक्तेषु हस्तलिखितपुस्तकेषु मध्ये 'अ ख ट' संज्ञितानि गुर्जरभाषानुवादसहितानि त्रीणि 'क' संज्ञितं चैकमित्येतानि चत्वारि पुस्तकान्यर्वाचीनान्येव। चरमे पृष्ठेऽनुक्रमेण तेषु विक्रमसंवद् (१९१५, १८५६, १९१८, १९७२) इतिप्रकारका लेखनकाला निर्दिष्टा दृश्यन्ते। क्वचित्स्थलेष्वेतेषु पुस्तकेषु ग्रन्थमधीयानैर्लेखकपाठकैः कृतगीर्वाणभाषाबहुपरिश्रमैर्गीर्वाणभाषापरिष्कृतस्वमतिविभवानुसारेण प्राकृतभाषादोस्या विसंवादिनस्तथाविधा-

शोधा कृता दृश्यन्ते यान् दृष्ट्वा-‘च ज’—संज्ञितपुराणपुस्तका प्राकृतभाषापरिचिता जना न कदाप्याद्रियेरन् । कतिपयसंवत्सरेभ्य प्राक् काश्यां मुद्रितस्य ‘कूर्म्मापुत्रचरित्र’स्य पाठेऽर्वाचीनहस्तलिखितपुस्तकपाठे च बहुविधं साम्यमालोक्यते । गुर्जरभाषानुवादा विभिन्नाः परस्परतो विभिन्नकर्तृका दृश्यन्ते; ‘अ’ पुस्तकगतानुवादः क्वचित्स्थलेषु टिप्पण्यलंकृतो वर्तते । ‘ग घ छ’ संज्ञितानि हस्तलिखितपुस्तकानि यद्यपि लेखनसमयोल्लेखरहितानि वर्तन्ते तथापि न तेषां समयो वैक्रमीयाष्टादशशताब्द्याः प्राग् निर्णेतुं शक्य इति तदवलोकनादवभाति । ‘त’ संज्ञितहस्तलिखिते पुस्तके विक्रमसवत् १८४५ परिमितावलोक्यते । ‘च ज’ संज्ञिते डेहलोपाश्रयस्थे पुस्तके तु प्राचीनतमे विक्रमीय १५९६, १६६३ तमवर्षाङ्किते वर्तेते । तयोर्मध्ये ‘च’ पुस्तक ग्रन्थकर्तृसमकालीनं स्यादिति प्रतिभाति । द्वे अपि पुराणलेखनपद्धत्या लिखिते पृष्ठमात्राङ्किते, न चैतयोर्मध्ये बहवो लेखकप्रमादाः सदृश्यन्ते । ‘ज’ पुस्तकं क्वचित्स्थले कृमिखादितं केनापि पण्डितेनात्मनः परेषां चोपयोगाय लिखितं स्याद्यतोनेकेषु स्थलेषु लेखकप्रमादशुद्धि कृता समुपलभ्यते क्वचित्क्वचित्संस्कृतशब्दैः पार्श्वभागयोर्दुर्गमशब्दानामर्था अपि निर्दिशिता दृश्यन्ते ॥

५ प्रकरणस्यास्य प्रणेतुर्नामसमयदेशकुलविद्वत्त्वादिसवंधिवृत्तान्तविषये तु ग्रन्थस्यैवास्यान्तिमगाथायां यत्किंचिदल्प लिखितं तेनैव सतोष्व्यमिति नूनमतीव खेदास्पदम् । सा गाथापि न ज्ञायते ग्रन्थप्रणेत्रा कृता केनापि वा ग्रन्थाध्येत्रा ग्रन्थकारशिष्यादिना सनिवेशिता स्यादि।त । सकलेषु हस्तलिखितपुस्तकेषु परिदृश्यमानतया ग्रन्थकर्तृकृतै-

ग्रन्थप्रणेतृसमयः ।

वेति गृहीतेप्येतस्याः सकाशा'ज्जिनमाणिक्य'इति ग्रन्थप्रणेतुर्नाम 'हेमविमलसूरि'इति च गुरूणां नामेत्येतदेव विज्ञातुं शक्यम् । ग्रन्थप्रणेतृसमयविषये ग्रन्थाद् बहिर्न कुत्रापि तत्कृतेतरग्रन्थेषु तदितरकृतग्रन्थेषु वा समुपलब्धानि निर्णायकानि कानिचित्प्रमाणानि । दशवैकालिकस्थानाङ्गोपदेशमालादिपुस्तकानां ग्रन्थान्तर्गतो निर्देशोपि बहुप्राचीनतमत्वात्तेषां ग्रन्थानां समयनिर्णयकर्मण्यकिंचित्कर एव । तत्र तत्र स्थानेषु ग्रन्थेस्मिन्संदृष्टा 'ददातु दानं०', 'नो विद्या०' इत्यादिसंस्कृतश्लोकास्तथा 'तिहां वड्डाइ' इति अपभ्रंशगाथे अपि समयनिर्णयकर्मणि न किमप्युपकर्तुं क्षमन्ते सुभाषितप्रायत्वादेषामनिश्चितकालप्रणेतृकाणाममीषां श्लोकानाम् । कर्मप्रकृतिक्षयप्रकारविवेचनपरा 'अणमिच्छ०' इत्यादिगाथास्तु यद्यपि वैक्रमीयत्रयोदशशतकजातदेवेन्द्रगणीनां समयानन्तरमेवैते कर्मग्रन्थरचकर्तारं लब्धसत्ताका इति न निश्चिततया बोधयितुं शक्तास्तथापि कर्मप्रकृतीनां विस्तृततया विवेचनं कुर्वाणानां ग्रन्थानामनन्तरत्वेन नूनमर्वाचीनत्वमस्य ग्रन्थस्यानुमापयन्ति ।

ग्रन्थसंशोधनार्थमुपलब्धेष्वादर्शग्रन्थेषु मध्ये पुराणतमस्यादर्शपुस्तकस्य लेखनसमयो वैक्रमीयवर्ष १५९६ परिमितो निर्दिष्टस्ततस्तस्मात्पूर्वं ग्रन्थस्यास्य समय इति तु निश्चीयते । ग्रन्थान्ते गुरुत्वेनाभिहिता हेमविमलसूरयश्च तपागच्छपट्टावल्यां श्रीसोमसुंदरसूरिसंताने श्रीलक्ष्मीसागरसूरिभ्योनन्तरं ये श्रीसुमतिसाधुसूरयस्तत्पट्टप्रतिष्ठाः, अमीषां कालश्च वैक्रमीयषोडशशताब्द्याः पूर्वार्धत्वेन कथ्यते । जिनमाणिक्यसूरीति नाम्ना ख्यातानां पट्टाचार्याणां नाम खरतरगच्छीयपट्टावल्यामुपलभ्यते तेषां समयश्च वैक्रमीयषोडशशताब्द्युत्तरभाग यथाविदितः । परंतु खरतरगच्छीयानां जिनमाणिक्यसूरीणां तपागच्छीयेभ्यः परमगुर्वित्युपपदधारिभ्यो हेमविमलसूरिभ्योधिगतविद्यत्वं तपागच्छखरतरगच्छयोः संबन्धे मनसि गृहीते

सति दुःकल्पनीयकल्पमेव भाति । ग्रन्थरचनाशैलीभाषास्वरूपादीनामवलोकनं चैवमेव विक्रमशोडशशताब्दीचरमपादरूपं समयं ग्रन्थप्रणयनकालतया समर्थयति ॥

को ग्रन्थप्रणेता जिनमाणिक्योऽनन्तहंसो वा।

६ 'क ग' संज्ञितादर्शपुस्तकयोरन्ते लेखकेन 'अनन्तहंस' इति ग्रन्थप्रणेतुर्नाम निर्दिष्टमवालोक्यते । यद्यपि ग्रन्थान्ते लेखकेन कृताष्टिप्पण्यो न सर्वथा प्रमाणत्वेन ग्रहीतुं शक्यन्ते तथापि केषुचित्प्रस्तुतग्रन्थसदृशेषु स्थलेषु ग्रन्थकृतोनन्तरं सुबहुकालापगमाभावेन परंपराया विच्छेदाभावेन च गुरुशिष्यसंतानप्रचलितप्रवादपरंपरायाः सर्वथा निःश्रद्धेयत्वाभावाज्जिनमाणिक्यस्य शिष्योनन्तहंसनामास्य ग्रन्थस्य प्रणेता कदाचित्स्यादिति संदेहदोलामधिरोहति मनः । अधिगतेष्वितरहस्तलिखितपुस्तकेष्वेवरूपो निर्देशश्चेत्समुपालप्स्यत 'ग' पुस्तके वा ग्रन्थकृत्समयप्रायो लेखनसमयनिदेशो वाऽकरिष्यत तर्हि निश्चिततयैवानन्तहंससूरिभिरयं ग्रन्थः प्राणायीति निश्चेतुमशक्यत । सिरिहेमविमलेत्याद्यन्तिमगाथा "श्रीहेमविमलः शुभगुरुर्यस्यासौ यो जिनमाणिक्यस्तस्य शिष्यराजेन ' अनन्तहंस ' नाम्ना रचितं " इतिप्रकारकसमासविग्रहस्वीकारेणानन्तहंसपरा व्याक्रियेत । छिन्नेषु हस्तलिखितपुस्तकेषु ' सीसरइएण ' इति पाठो दृश्यते, ' रइअ ' इति पदस्य च ' रतिद ' इत्यर्थो गुर्जरभाषानुवादे कृतोघलोन्यते तत्स्वीकारे जिनमाणिक्यस्य रतिदः शिष्य' इत्याद्यर्थं प्रादुर्भवेत् ' सीसराअ ' ( शिष्यराज ) पाठदृश्यमानात्मश्लाघारूपदोपलवोपि परिहृत स्यात् । उपान्त्यगाथायां निश्चितत्वेन ग्रन्थान्तर्गतायां ' अणन्तसुहभायणं हवइ ' (अनन्तसुखभाजनं भवति ) इति पदजातं कविना प्रोक्तं तत्र 'अणन्तसुह' इति पदे " अनन्तस्य नाम अनन्तहंसमुनेः काव्यप्रणेतुर्मम

सुखभाजनं भवति" इति ग्रन्थप्रणेतृमनोगतव्यङ्ग्यकल्पनास्वीकारो न केवलमनन्तहंस-प्रस्तुतग्रन्थप्रणेतेति पक्षं स्वीकर्तव्यकक्षतां प्रति प्रक्षिपेत्किन्तु विनयनम्रीकृतमानसो ग्रन्थप्रणेता प्रतिपदोक्ततयात्मनो नामोच्चारणमकृत्वा 'अनन्तसुखभाजनं भवति' इति पदजातेन तद् व्यनक्तीति समधिकः काव्यगुणलवोऽप्यत्र दृष्टचरः स्यात् । कतिपयदिवसेभ्यः प्रागत्र संजाते जैनसाहित्यप्रदर्शने 'दृष्टान्तरत्नाकर' नामा हस्तलिखित-संस्कृतग्रन्थो निदर्शनपथमागतस्तत्र च जिनमाणिक्यशिष्यस्यानन्तहंसस्य नाम ग्रन्थप्रणेतृतया निर्दिष्टं ग्रन्थप्रणयनसमयश्च 'शशिनगतिथि (थि) मितवर्षे' इति पदेन विक्रमसंवद् (१५७१) इति सुनिश्चितत्वेनोक्तं । तत्र कतिपयस्थलेषु परिदृश्यमानं वर्णनस्य कल्पनायाश्च साम्यं प्रस्तुतग्रन्थस्यानन्तहंसप्रणेतृकत्वेऽधिकं प्रमाणं स्यात् ॥

**ग्रन्थप्रणेतृसमय-देशविचारः ।**

७ जिनमाणिक्यसूरयोऽनन्तहंससूरयो वा ये केऽपि स्युरस्य ग्रन्थस्य प्रणेतारः, निदर्शितमेवोपरिष्टाद् यद् ग्रन्थस्यास्य लेखनसमयो विक्रमस्य षोडशशताब्द्याश्चरमचरणः । हेमविमलसूरीणां तपागच्छपट्टावल्यामाचार्यतयावस्थानस्य समयः प्रायो १५६०-१५९० परिमितविक्रमवर्षत्रिंशद्य इति लोके प्रसिद्धम् । वार्धक्य एव प्रायो मुनयः पट्टाचार्या भवन्तीत्युपरिनिर्दिष्टे वार्धक्यसमय एवामीषां पूर्वाश्रमशिष्या जिनमाणिक्यसूरयः प्रशिष्या अनन्तहंससूरयो वा स्वायुषः पूर्वभागे वर्तमाना इमं ग्रन्थं व्यरचयन्निति भाति । अस्यामेव विचारसरण्यामवलम्ब्यमानायां 'च' संज्ञितहस्तलिखितपुस्तके १५९७ इति विक्रमसंवदा लेखनकालनिर्देशो ग्रन्थस्यास्य कालस्तत्पूर्वं कतिपये संवत्सरा न कथमपि तत्पश्चादिति सूचयन्सुतरां संयुज्यते । 'च' संज्ञित-हस्तलिखितपुस्तकं ग्रन्थप्रणेत्रा समकालीनं तच्छिष्यैरेव

स्वोपयोगार्थं लिखितं भवच्च जानीमो ग्रन्थकृतावलोकितमपि कदाचित्स्यादिति तदेवास्य ग्रन्थस्य संशोधनकर्मणि प्राधान्यमर्हति तथैव तदस्मिन्संशोधनकर्मण्युपयोजितम्। ग्रन्थप्रणेतुर्विहारदेशकुलनामविद्याधिगमादिविषये यद्यपि चरमश्लोकाद्न्यच्च किंचिदप्युपलभ्यते तथाप्युत्तरगुर्जरा एव विहारदेश एतेषामासीदिति गुर्जरमरुदेशप्राप्तविख्यस्य तपागच्छस्य संबन्धेन निर्णेतुं शक्नुमः ॥

ग्रन्थस्य भाषास्वरूपादिविवेचनम्।

८. कुम्मापुत्तचरित्तमिति प्रणेत्रा दत्तनामधेयं प्रस्तुतप्रकरणं कथानकरूपं वर्तते, कथानकनाम्नैव च तैस्तैः प्रतिलेखकैः प्रतिप्रति तस्योल्लेखः कृतो दृश्यते। हेमचन्द्राद्याचार्यप्रणीतव्याकरणनियमबद्धायां महाराष्ट्रीभाषायामेवाखिलप्रबन्धः प्रणीतो वर्तते। केवलं प्रारम्भे 'इत्थंतरे इंदभूई०' (पृ २-३) इत्यादिको गद्यप्रबन्धोऽर्धमागध्यां सूत्रलेखनसरण्या सूत्रोद्धृतप्रायेणैव वस्तुना शब्दजातेन च रचितस्तथा चतुर्षु स्थलेषु (श्लो० ५३ ११३,११४,१६१) सुभाषितप्राया सुप्रसिद्धा संस्कृतश्लोका प्रोक्तवस्तुदार्ढ्याय प्रपञ्चिता एकस्मिंश्च स्थले (श्लो० १२१,१२२) अपभ्रंशश्लोकद्वयं च प्रणिहितम्। प्रतिपादयितव्यं सकलं वस्तु सरलया सुन्दरया प्रसादपूर्णया व्याकरणप्रमादश्रुतिदुष्टताग्राम्यत्वादिदोषरहितया महाराष्ट्र्या प्राकृतभाषया निबद्धं, स्थले स्थले कविसमयनिबद्धरपि चमत्कृतिपूर्णैः सुलभावगम्यमानरुपमारूपकयमकानुप्रासादिभिरलंकारैरलङ्कृतं दृश्यते। क्वचित्स्थलेषु वर्तमानेऽप्यर्थस्य गौरवे वस्तुनश्च दुर्बोधत्वे न कृतः शब्दाडम्बरो न वा गहनगहनविपर्यायतारेणार्थावबोधकाठिन्यं समापादितम्। विना बहुना प्रयत्नेन

गाथानुगाथं ग्रन्थपठनं कुर्वन्नध्येतृजनः पुरातनमहर्षिप्रणीतान् पुराणग्रन्थानेवाहं वाचयामीति नूनं मनसि मतिं वितनुयात् । पुराणग्रन्थेषूपलभ्यमाना आर्षप्रयोगा देशीशब्दाश्चात्र नाव-लोक्यन्ते लोके प्रचलितत्वाभावाद्व्याकरणनियमनिबद्धत्वाच्च प्राकृतभाषाया ग्रन्थप्रणेतृसमये । समधीतगीर्वाणभाषानिबद्ध-ग्रन्थप्रपञ्चतया सुसंपादितसंस्कृतभाषाप्रभुत्वस्य कवेरस्मिन् प्रस्तुते ग्रन्थे न केवलं ततस्तत्र च तथाहीत्यादयः संस्कृतशब्दा अवतरणप्रयोजनकर्मणि मध्ये मध्ये निपातिता दृश्यन्ते किंतु स्थले स्थले कवेर्महाराष्ट्रीभाषा गीर्वाणभाषापरिणामिनी प्राकृतशब्दैरूपानिबद्धा तत्समशब्दबहुला च वर्तते इति सूक्ष्ममतिभिर्विभावयितुं शक्येत । प्रारम्भात्प्रभृत्यवसानपर्य-न्तमत्र प्रबन्धे प्रणेतुः सत्यामपि व्याकरणनियमदृढनिबद्धायां संस्कृतप्राचीण्यपरिणामितायामर्वाचीनप्रायायां महाराष्ट्रीभा-षायामुपयुक्तायां सुनिश्चिततरमेतद्वाक्यमालोयं प्रबन्धः पुरा-णसूक्ष्मयावगाहनानन्दं वाचकमनसि निदधातीति सुमहा-त्मतिविभव एतद्ग्रन्थप्रणेतृणामाचार्यवर्याणाम् ॥

**कथाभागोऽस्या-दिविचारः ।**

१. अङ्गोपाङ्गादिसूत्रेष्वनुपलब्धोयं कूर्मापुत्रकथाभागो बहु-प्राचीनश्चिरकालप्रचलितपौराणिककथास्थलं-कृतस्थानो जिनसंप्रदाये प्रचलितः सर्वतो विश्रुत आसीत् । समुपलब्धेषु कतिपयेषूल्लेखेषु मध्ये विशेषणवति (गाथा ३८, ४१, ४४) वि-शेषावश्यकभाष्य (श्लो० ३१७०, ३१७१) औपपातिकसूत्रटीका - (पृ ११४ ) मूपलभ्यमाना उल्लेखाः प्राचीनतमा वर्तन्ते । लोकप्रचलितकथाप्रवादप्रवाहादुद्धृत्य यद्यपि काव्यतयायं निबन्धुं शक्य एव तथापि शुभवर्धनप्रणीतऋषिमण्डल-वृत्त्यन्तर्गतेन कथाभागेन सह समुपलब्धबहुविधसाम्यत्वा-त्कविनायं शुभवर्धनप्रणीतवृत्तेरेवोद्धृतः स्यादिति भाति ।

विक्रमसवंचतुर्दशशताब्दीप्रारम्भलब्धसत्ताकानां कर्मग्रन्थकर्तृणां तपागच्छपट्टाचार्यललामभूतानां देवेन्द्राचार्याणां शिष्यवरैस्तपागच्छपट्टाचार्यैर्धर्मघोषसूरिभी रचिते ऋषिमण्डलग्रन्थे कूर्मापुत्रकथानक "दोरयणिपमाणतणू जघण्णओगाहणाइ जो सिद्धो। तमहं तिगुत्तिगुत्तं कुम्मापुत्तं नमसामि" (साराभाई मणिलाल नवाबप्रकाशितजैनस्तोत्रसंदोहान्तर्गतऋषिमंडल क्र.म. १२८) इत्येकयैव गाथयोपनिबद्धं वर्तते। ऋषिमण्डलवृत्तिकारेषु मध्ये द्विजैरेव शुभवर्धनहर्षनन्दनादिभिर्वृत्तिकारैस्तानि तानि कथानकानि साकल्येन सगृहीतानि। एकस्यैव पुरषस्य भिन्नभिन्नप्रणेतृभी रचितेषु चरित्रेषु मध्ये बाल्ययौवनाविद्याधिगमविवाहादिबहुविधप्रधानप्रसङ्गलपादिते मूलभूते वस्तुनि फाळतस्तत्तत्प्रसङ्गानुक्रमकथने चावश्यकतया परापतत्यपि साम्ये तत्तत्प्रसङ्गाना न्यूनाधिकत्वेन वा विभिन्नतया वर्णनं प्रतिप्रणेतृविभिन्नमतिविभवहेतुक रसपरिपोषवैचित्र्य लेखनशैलीवैचित्र्यं च दृश्यन्त एव। तत्र सत्यपि रसपरिपोषवैचित्र्ये सत्यामपि च लेखनशैलीविचित्रतायां यत्र प्रधानप्रसङ्गेषु न्यूनाधिकत्वाभावोऽवान्तरप्रसङ्गेषु वर्णनाधिक्य बहुविध शब्दसाम्य हेतुव्याकरणैर्निदर्शनान्तरैश्च वस्तुपरिपोषप्रयत्नस्तत्र सुविस्तृततरत्वेन वर्तमान कलाधिक्ययुक्त प्रकरण लघुतर निरलंकृतं प्रकरणं मूलत्वेन निबध्य प्रायो विरचितं भवतीत्यनुमातु शक्यते। अमुनैव विचारेण सत्यपि पञ्चविंशत्यधिकस्थलेषु स्फुट विभिन्नत्वे शुभवर्धनसूरिविरचितं ऋषिमण्डलवृत्तिगत कूर्मापुत्रकथानक मूलत्वेन निवेश्यैव प्रस्तुतः प्रबन्ध प्राणायीति वदितुं शक्यम्। तथा च हर्षनन्दनविरचितटीकागतं तु कूर्मापुत्रकथानकं प्रस्तुत 'कुम्मापुत्तचरित्त' मुपजीव्य लिखितमित्यपि प्रतिपादयितु शक्यम्। शुभवर्द्धनसूरिभि स्वटीकायां श्रीहेमविमलसूरि-

समकालीनतया तेन आत्मन उल्लेखतया च हर्षनन्दनटीकान्ते निदर्श्यमान- १७०४ परिमितविक्रमवर्षगततद्रचनासमयश्चैतदेव समर्थयितुं शक्नुतस्तराम् ॥

शुभवर्धनविरचित-कूर्मापुत्रकथानकेन सह प्रस्तुतग्रन्थ-साम्यम्।

१० शुभवर्धनवृत्त्यन्तर्गतकूर्मापुत्रकथानकं द्व्यशीतिश्लोकात्मकं पदेपदेत्यन्ताशुद्धादपि हस्तलिखितपुस्तकसकाशान्महता प्रयासेन यथामति परिशोध्य संगृहीतमस्य पुस्तकस्यान्ते परिशिष्टतया। तस्य सूक्ष्मतया कृताद्यवलोकनादेतत्सुविशदीभवेद्यत्तेषु तेषु स्थलेषु चास्य ग्रन्थस्य तत्सकाशाद्विभिन्नता दृश्यते सा ग्रन्थप्रणेत्रा बुद्धिपुरःसरं विहिता किंचिद्विशिष्टहेतुनिबन्धना च। तथाहि—सुरमवनस्य (२५-२६) राजगृहस्य (९६) महेन्द्रसिंहनृपस्य (९७) कूर्माराज्याः (९८) मातापितृदर्शनसंजातकुमारप्रमोदातिशयस्य (६६-६७) गर्भिण्याः कूर्मायाः (१०७) च वर्णनानि शुभवर्धनवृत्तौ परमलघूनि सन्ति; तानि प्रस्तुतग्रन्थे ग्रन्थकृता यत् स्वयंरुचिनियुक्तोपमारूपकाद्यलंकारैः सुशोभितानि मनोज्ञहृदयंगमानि च कृतानि तत्र पौराणिकशैल्या निबद्धायाः केवलवस्तुवर्णनपराया अलंकारादिचमत्कृतिचारुत्वरहितायाश्च वृत्तेः स्थाने हृदयाह्लादि सुन्दरं रसपरिपूर्णं काव्यनिर्माणमेव ग्रन्थप्रणेतुर्मनसि हेतुतया स्यादिति भाति। यक्षिणीराजपुत्रसंवादस्य (२१-२२,३०-३१, ५५-६०) वणिक्कथायुक्तप्रवचनस्य (७२-९०) जगदुत्तमकेवलिनः प्रवचनस्य (१५५-१६२) च कविकल्पनानिर्मितत्वेपि नूनं तेनैव हेतुना कवेर्मनसि संनिधीयमानेन भवितव्यमिति भाति। क्वचित्स्थलेषु वृत्तिगतस्य स्वभावशुद्धस्यार्थस्य तत्कालप्रचरितैः संस्कृतप्राकृतापभ्रंशभाषागतैर्दृष्टान्तैः (४२,४३,५३,११३,११४, १२१,१२२,१६१,१७३-१८२) यो विस्तरः कृतः, तत्र सुसाधितेपि

सम्यक्कथार्थपरिपोषणकर्मणि मुनिव्रतधारिणा नितरां वि-
नीतेन कविनानीहितमपि पण्डित्यप्रदर्शनं संजातं, क-
चिज्जवनिकायां पृष्ठतस्तिरोहितोपि कवेर्विद्वद्भाव आत्मनः
प्राकट्यमकरोत् । केचन भेदा अतीव क्षुद्रत्वेन न
विचारार्हाः ( श्लो० १९,३९,१२०-२२,१३३-१३४,१९४ ) ।
प्रबन्धारम्भे दानतपःशीलभावनारूपस्य धर्मस्य चतुर्वि-
धत्वं संख्याय भावस्यैव तन्मध्ये प्राधान्येन कथनं ( श्लो०
५-७ ), भावप्राधान्यसिद्धिं प्रबन्धस्य वस्तुत्वेन प्रक-
ल्प्य प्रबन्धान्तर्गतेषु तेषु तेषु स्थलेषु ( श्लो० १३५-
१४७, १५५-१६२ ) दीक्षास्वीकारसंबन्धिकूर्मापुत्रविचार-
विवेचनदेवादित्यप्रवचनादिभिर्विस्तृततया निर्मितैरवान्तरप्र-
करणैस्तस्यैव परिपोषकरणमन्ते च कथानायककूर्मापुत्रमुखेन
भावप्राधान्यसिद्धिः (श्लो० १९०-१९३) सर्वमेतत्कविनिर्मितमेव
सत्' भावस्य महाप्रधानत्वसाधनमेव प्रबन्धरचनहेतुतया प्रणे-
तुर्मनस्यासी' दित्येव नूनं स्पष्टतया ज्ञापयति । ग्रन्थारम्भे अङ्गो-
पाङ्ग-ग्रन्थलेखनपद्धतिं स्वीकृत्य महावीरस्वामिनां कथानक-
स्याख्यातृत्वेन गौतमगणधरस्य च पृच्छकत्वेन समानयन
( श्लो० १-८ ) कविकल्पितमेव । पाठकजनं प्रति कथासंद-
र्भस्यास्यात्यन्तप्राचीनत्वस्थापनमेव केवलं नैतस्य प्रयोजनं,
किंतु तत्रतत्र निर्दिष्टस्य भावप्राधान्यसिद्धिरूपस्य प्रबन्ध-
प्रधानवस्तुनः सिद्धौ ' श्रीमद्वीरस्वामिनोप्येवमुपदिशन्ति '
इति प्रदर्शनेन प्रमाणप्रदर्शनमपि समानीतमनेन स्यादिति
द्वितीयमपि प्रयोजनं नूनं कवेर्मनस्यवस्थितमासीदिति भाति॥

उपसंहारः । ११. अस्य ग्रन्थस्य संशोधनकर्मणि दश हस्तलिखितप्रतय उपलब्धास्तासु षट् प्रतयो 'ग घ च छ ज ट' संज्ञिता अत्रस्थ 'डेहला उपाश्रय'सकाशादुपलब्धाः, 'अ' पुस्तकमत्रस्थ 'शान्तिसागर' भाण्डारादुपलब्धं, 'क' पुस्तकं सुरतपत्तनस्थ 'श्री जैनआनन्द' पुस्तकालयादुपलब्धं, 'ख त' पुस्तके च लिम्बडीग्रामस्थानन्दजी कल्याणजी जैनभाण्डारादुपलब्धे । स्थले स्थले लेखकप्रमादेषु सत्स्वप्येतेषां पुस्तकानां ग्रन्थसंशोधनकर्मण्यतितरामुपयोगोऽभूत् । येषां प्रयत्नैः प्रोत्साहनैश्चैतेषां पुस्तकानां मम लाभोऽभूद्यथामति च मयास्य ग्रन्थस्य संशोधनकर्म कृतं तेषां सहृदयानां श्रेष्ठि जेशिंगभाइ सुतरिया, अध्यापक साकलचंद् शाहा महाशयानां इतरेषां च केषामपि महाशयानां मम सुहृदां, मम च शिष्याणां शीलविनयादियुतानां 'वाडिलाल चोकसी', 'व्रजलाल शाहा,' 'हिराभाइ जव्हेरी' त्यभिख्यानामहं महान्तमुपकारभारं बिभर्मि । समीचीनतयेन शीघ्रेण च मुद्रणकर्म संपादयद्भिः 'सूर्यप्रकाश' मुद्रणालयाधिकृतैरप्यत्र वस्तुनि नूनं बहूपकृतमेव । सर्वेषामेतेषामुपकारभारो ग्रन्थावलोकनं कुर्वद्भिर्वाचकचिकित्सकवर्गैः परीक्षार्थं पठनं कुर्वद्भिश्च विद्यार्थिवर्गैस्तत्कृताभ्यासपरिशीलननिरीक्षणाभ्यां लघूकृतो भवेत्, तेनैव च यत्किंचिदानृण्यमेतेषां मम सुहृदां मया संपादितं स्यादित्याशासेऽहं—

गुजरात कॉलेज,
अमदावाद.
पौष कृष्ण एकादशी,
शके १८५२; सं. १९८७

'अभ्यंकर' उपाह्व-
'वासुदेव' तनूजः
'काशीनाथः' ॥

## A critical note on the manuscripts used

Ms अ of Shântisagara Bhandar Ahmedabad written legibly, in 1859 A. D. (मार्गशीर्ष शुक्ल ८, सं १९१५) with a Gujarati gloss by धर्मविजय dated 1772 A D (फाल्गुन कृष्ण ४ सं १८२८).

Ms क of Jain Anand Pustakâlaya Surat written in 1916 A D (माघ-शुक्ल-प्रतिपदा मदवासरे संवत् १९७२) at Patan अनन्तहंस is mentioned as the author by the copyist

Ms ख of Anandji Kalyânji Jain Bhandar Limdi written at Gotrakâ city in 1800 A D (मार्गशीर्ष-कृष्ण-६ भौमवासरे संवत् १८५५) जिनमाणिक्य is given as the author's name Many clerical errors are noticed

Ms ग of Dehla Upashraya Ahmedabad written legibly and correctly No date is given. अनन्तहंस is given as the author's name by the copyist

Ms घ of Dehla Upâshraya There is no date, and the manuscript is not written well

Ms च of Dehla Upashraya well written, dated 1 ›39 A D (श्रावण शुक्लपक्ष संवत् १५९६) The copyist remarks that the copy was prepared for तपागच्छ use.

Ms छ of Dehla Upashraya Appears to be old although no date is given Written inaccurately

Ms. ज of Dehla Upashraya dated 1596 A.D (आषाढ शुक्ल पक्ष, संवत् १६५३)

Ms ट of Anadji Kalyanji Jain Bhandar Limbdi, dated 1858 A D (चैत्र शुक्ल पक्ष संवत् १९१५) Amendments made by the reader at various places

Ms त of A K J. Bhandar Limdi Dated 1769 A D. (पौष शुक्ल ३ संवत् १८२५)

# Introduction

The necessity of the edition

No great apology is needed for the editing of the present book beyond the fact that no printed copies of it are at present available for the use of students reading for the University examinations. The importance of the subject matter of the book, which gives in very simple Prakrit the outline of the life of a very ancient Jain Kevali is also another consideration for undertaking the edition. The Manuscript material for editing the work collected by me was quite satisfactory as my friends and pupils spared no trouble and labour in procuring manuscript copies from the several different places where they were available. The short time at my disposal does not, however, make it possible for me to consult manuscripts at some more places. There has, besides, remained scarcely any necessity also to consult them as the ten manuscripts, which have been consulted, have been sufficiently representative and have given ample critical material. Two manuscripts belonging to the 'Dehlâ Upâshraya' (*Doshwada's Pole, Ahmedabad*) are very old, possibly pertaining to the time of the author, and a critical perusal of them is sufficient to

settle the text by distinguishing between the *genuine and the spurious matter* at the various places of doubt.

**Manuscript material and preparation of the press copy**

2 All the ten manuscript copies, which have been consulted, appear to belong to the same group or family as there are no cardinal outstanding differences in readings leading to their division into families The differences in readings which are merely due to the ignorance of Prakrit or Sanskrit of the scribes or to the provincial peculiarities of pronunciation such as the utterance of श् for स् have been completely ignored in preparing the present edition They are not even noted as other readings in the footnotes, as their number, which is nearly ten to fifteen times that of the variants noticed, would have not only unnecessarily swollen the number of readings but would have given merely a long list of mutilated and miswritten words There are also left out unnoticed, the differences in readings due to the frequent practice of the *substitution of* ण् *for* न्, *or to that of reading* य् in the place of a deleted consonant The number of real variants which are noticed in the footnotes is small, and a careful perusal of the several different readings from the various copies

would show that the manuscripts च and ज of the Dehla Upashraya if purged of the small number of scribal errors represent almost the genuine text which has practically been chosen for the purposes of the present edition The principle of choosing readings for the text on the *mere ground of their being given* by a majority of manuscripts has not been followed in settling the text, as it is not a very sound principle at all in the first place and secondly as all the manuscript copies collected for the present work do not belong to the same period and the same group

*Critical description of the manuscripts*

3 Three Manuscripts designated अ ग and ट which are possessed of a Gujarati translation and the manuscript named क are very modern bearing respectively the dates 1857 1799, 1858 and 1915 A D It appears that the text therein has been amended at several places by the copyists or the readers who used them in accordance with the sense which they saw at severel places as Sanskrit scholars and not as Prakrit Pandits The printed Benares edition appears to be based on such modern manuscripts The Gujarati translation in manuscript अ although written incorrectly, is accompanied

by explanations at several places There are no dates found in manuscripts ग, घ and छ, but, it appears that they are not very modern; they may possibly belong to the eighteenth century. Manuscript त is dated 1788 A. D The manuscripts designated च and ज are very old belonging to the sixteenth century (1539 and 1596 A. D.) which is practically the time of the author. Both the manuscripts are written tolerably well and there are not many clerical errors. Both follow the old style of writing characterized specially by *Prishthamâtrâs*. Manuscript ज has been eaten a little by moth at some places. It was probably copied by a Pandit and he himself or somebody else studied from it as there are found many corrections made at several places, and the Sanskrit equivalents occasionally given in the margin

**The author and date**

4. Regarding the author and his time, ancestry, scholarship, locality and the like, little information is available beyond what is found in the last stanza of the text where *Jinamânikya* appears to be given as the name of the author and Hemavimala as the name of his preceptor. The date of the earliest manuscript collected for the present edition is 1539 A. D. which fixes

the latest limit for the composition of the book No external evidence mentioning the name of the author or the book or his other works is available There are one or two Stotras in Sanskrit assigned to Jinamânikya but their perusal does not lead to any definite conclusion The internal evidence, which becomes useful in fixing the earliest limit shows at the most that the author knew the Das'avaikalikasutra the Sthânângasûtra and the Upades'amâla which are mentioned by name and from which passages are quoted There are some Sanskrit stanzas quoted which are likely to be spurious and although they be taken to be genuine nothing very useful regarding the date can be inferred as the stanzas are more or less current Subhashitas which cannot be ascribed to any definite source It can only be assumed that the Hemavimala mentioned in the text as the Guru of the author is the same as the Hemavimala Achârya of the Tapâgaccha who is said to be the 55th preceptor in the genealogy of the Tapâgaccha and whose date is given to be the beginning of the sixteenth century A D There is found the name of Jinamanikya among the Achâryas of the Kharatara Gaccha with 1525 to 1555 A D as his date as the Pattâchârya of the Gaccha

but, he cannot possibly be the author of the present work as, Hemavimala of Tapâgaccha could not possibly be his preceptor. This date is further corroborated by the evidence of language, style and method which make the work difficult to be placed earlier than the sixteenth century A. D

**Name of the author**

5 Manuscripts क and ग mention the name of Anantahamsa as the writer of the book in the colophon The colophons cannot necessarily be taken to give a reliable evidence, but, because the writer of the colophon of the present work i e the copyist is not much removed in time from the author, it can be believed that he might have been familiar with a living traditional information about the authorship of the book which he liked to give in the colophon Although the name of Anantahamsa is not actually mentioned in the concluding verse of the text which has mentioned only Hemavimala and Jinamânikya as the preceptor and the pupil, the compound जिनमाणिक्यशिष्यराजेन, if taken as a षष्ठीतत्पुरुष compound, is capable of admitting the supposition of a further pupil of Jinamânikya whose name might have been Anantahamsa The compound in that case can be dissolved as श्रीहेमविमल शुभगुरु यस्य अग्रौ य श्रीजिनमाणिक्य तस्य य शिष्यराज, तेन

Some manuscript copies read रइयण which is *explained in a Gujarati commentatary as* रतिदेन In fact, if the reading रइयण is to be explained, this is a way to explain it, ( vide notes page 48 ) the word रइयण taken as रचितेन being in fact tautologous and giving besides, no suitable sense. The compound then can be understood as जिन माणिक्य च शिष्य (गुरु प्रति) रतिद तेन The reading रइयण ( explained as रतिदेन or रजितेन) removes also the tinge of the flaw of egotism which is contained *in the word* राजन *which is used* by the author with respect to himself The word Anantahamsa is no doubt, seen in none of the manuscripts of the present work in the body of the text, yet, on the strength of the colophon *of the manuscript* ग which appears to be sufficiently old although no date is given by the writer Anantahamsa may be assumed to be the author It may be supposed that he did not like *to cite his name on* account *of modesty*, a practice which is not uncommon in India even to-day The name although not actually cited can, however, be said to be suggested in the *verse preceding the last in the wording* अणतसुह मायणी हवइ which can also be interpreted as "becomes an object of delight to Ananta ( i e the author himself) ' The Jain Sahitya Pradar-

s'ana, held here recently, brought to light a manuscript copy of a Sanskrit work named दृष्टान्तरत्नाकर In the Pras'asti of the work अनन्तहंस is given as the name of the author and Jinamāṇikya as the name of his Guru The date of the work is there difinitely stated to be 1513 A. D. There is noticed at a few places in that book a similarity of expressions with our book which may well adduce a further evidence for Anantahamsa being the author of our book.

Details about the author

6 Whoever—Jinamāṇikya or his pupil Anantahamsa—be the author, it is well-nigh certain that he lived in the beginning of the 16th century as the date of their preceptor Hemavimala, who belonged to the Tapāgaccha is definitely cited to be the end of the 15th century A D and that of दृष्टान्तरत्नाकर to be 1513 A D The oldest of the manuscripts procured, designated क, bears 1538 A D as its date and the text followed for the purpose of the present edition is mainly based upon it, as it is very likely for the said manuscript to have been based upon the author's text or perhaps to have been seen or dictated even by the author. Regarding the place of residence, the genealogy, the learning and the like of

the author, no definite information is available beyond the name of his preceptor, which he himself has mentioned. It is likely that he lived somewhere in Central India West as the manuscripts found in Gujarat appear to be written almost at his time, the book itself not being such an epoch-making production or the author not being such a stupendous personality, as could make it possible to have manuscript

7 The nature of the book, which is styled 'Kummâputtacharitta' by the author, is somewhat like a narration as borne out by the term 'Kathanaka' which is seen invariably used in the Manuscripts which were copied down from time to time by preceptors and pupils for study The narrative is written in simple beautiful unassuming Maharashtri Prakrit with the exception of a few small passages of one or two stanzas in Sanskrit, and the long prose passage at the beginning in the Ardha-Mâgadhî language of the Sûtras, which is almost a quotation from the Sûtra Literature The language (Mahârâshtri Prâkrit) is chaste and pure grammatically and idiomatically, and almost free from laboured metaphors conventional similes and unnatural puns There is no grotesque show of pedantry While reading the book, one is reminded of small stories in epic literature which the author appears to have imitated in style, diction and manner We only here *miss the few* archaisms and the sprinkling of Deshi words which we generally find in the epics As the author belonged to a time when Prâkrit was not a spoken language, the language of the author is naturally bound by strict rules of grammar We find a few Sanskritisms in his

**Form and style**

Maharashtri Prakrit which he could not avoid on account of his very close familiarity with Sanskrit which was then the language of the Pandits and the living literature It is certainly to the credit of the author that in spite of the considerations given above, he has been fairly successful in creating in his treatise the serene and dignified atmosphere of the epics, although he himself was removed from the epic period by a number of centuries

**Sources of the story**

8. Regarding the sources of the narration, which, as observed above belongs to the stock of ancient mythological stories, it is fairly certain that the story was current from very old times among the common legends and must have occupied a place in the old mythological books. No reference to it is found in the Jain canonical books the earliest references to it are seen in the commentary literature and other books like विशेषणवति ( Gathas 38, 41, 44 ) विशेषावश्यकभाष्य ( *St .170, 3171* ) ओपपातिकसूत्रटीका ( *page 114* ) Our author has probably taken the story from the Sanskrit commentary of Subhavardhanasuri on Dharmaghosha's 'Rishimandala' ( which is now being printed in the Jain Stotra Sandoha published by Sarabhai Manilal

Nawab ) The text of the Rishimandala which has given the stories of old sages very very briefly by quoting the prominent features of each sage in one or two stanzas only, refers to the story of 'Kummâputta' in one stanza only, which means "I bow down to Kummâputta who had the height of his body measuring only two hands, and who became enlightened and went to Siddhigati characterized by the shortest bodily measure, being guarded by the three Guptis" (St 125) Out of the various commentaries and glosses, only two or three commentators like *Subhavardhana or Harshanandana have narrated* the stories at great length while others have simply remarked at various places that the stories are too famous to require any detailed comment Our author's narrative not only bears a very close resemblance to that of Subhavardhana, but fulfils all the necessary criteria to enable us to say that our author has got his narrative based on that of Subhavardhana The prominent features of the life of Kummâputta are the same in both as they are bound to be Subhavardhana's narrative is extremely brief, consisting of only 82 stanzas ( see Parisishta ) allowing no digression and barely describing each incident in a very direct unornamented matter-

*of-fact manner.* Our author, *too* has not gone into detailed descriptions, yet, he has given short descriptions of each incident with poetic touches and embellishments. There are two or three lengthy digressions also, but there the main thread of the narration is, of course, not lost sight of These very criteria allow us to say that the version of Harshanandana is a later one probably based upon that of our author. The statement of Subhavardhana of his being a contemporary of Hemavimalasûri and the mention of the date of his own composition by Harshanandana as *1657* A. D can well corroborate the conclusions drawn above.

**Changes in the narration of the story**

9. The necessary extract from the commentary of Subhavardhana taken from a very inaccurately written Manuscript copy is given in the Parisishta after making several corrections, and a careful perusal of it would show that the differences *which are noticed at more than* twenty five places between the two versions are not of the type of radical departures but they are somewhat of the type of additions, innovations and digressions, made possibly with some purpose: Almost all passages containing descriptions such as *those* of Surabhavana (25-26) Râjagriha (96), King

Mahendrasinha ( 97 ), Qeen Kûrma ( 98 ), the delight of the prince ( 66–67 ), the pregnancy of the queen ( 107 ) etc are the creation of the author himself probably introduced with a view to convert the simple matter-of-fact epic-styled narration of Subhavardhana into an unassuming elegant appealing piece of poetic composition The dialogue of Yakshinî and the prince (21–31) the sermon of the Kevali Jagaduttaria (155–162) are innovations of the poet with possibly the same purpose *In spite of the honest effort* made and sufficient care taken by the poet to turn the narrative into ballad poetry, his personality as a profound scholar of scriptures and theology could not remain altogether hidden, and, on a few occasions there have surreptitiously crept in not only a few quotations and corroborative remarks from the canonical and secular literature ( cf stanzas 42, 43, 53, 113, 114 121, 122, 161, 177–82 ), but solid learned arguments in the course of those very dialogues and sermons (see stanzas 55–60, 72–90 and 156–62) which he primarily innovated with the purpose of embellishing the ballad transformation of the original simple narrative The deviations from the source viz Subhavardhana s narrative are too insignificant to be discussed as for example in the

subject matter of stanzas 19, 39, 120–22 133–34 and 194 A few changes appear to have been made with a distinct purpose It seems that the author wanted to impress that thought or mental condition was the most important of the four constituents of Religion—charity, penance conduct and thought He in fact, appears to have made it the central teaching of his whole narrative which he has emphatically mentioned at the beginning, corroborated effectively in the course of his narrative at various places and conclusively proved at the end by a clear statement of it from the lips of the hero who cites himself there as an illustration to the point (190–193) The introduction of Mahâvîraswâmi as the narrator of the account to his pupil Gautama (*see stanzas 1 to 8*) *is also* an innovation of the poet intentionally made not only to create an atmosphere of antiquity round *the story, but to convey home to the readers* the supreme importance of mental purity of thought over everything else by implying that even the Prophet himself testified to it by emphasizing it to his pupil Gautama

Conclusion

10 As expressed above ten manuscript copies were used in the collation work of the present edition designated अ, क, ख, ग, घ, च, छ, ज, ट and त in the foot-notes, which mark the several

differences of readings The Benares printed edition is designated ब The manuscripts were very kindly lent to me by the managers of the Delha Upashraya Bhandar, the Sântisâgara Bhandâr, the Shree Jain Ãnanda Pustakâlaya at Surat and the Ãnandji Kalyânji Jñâna Bhandâr at Limdi to whom I am much indebted I am very grateful to Jeshingbhai Sutaria, Prof. Sankalchand Shah and some other friends of mine as also to my pupils Vadilal Chokshi, Vrajlal Shah and Hirabhai Jhaveri who not only procured the above-mentioned manuscripts for me but gave me every facility and help for bringing out the present edition I am also thankful to the Surya Prakash Printing Press for doing the work of printing quickly and efficiently Let me wish that students and scholars read, study and critically peruse the present work and store its golden lesson in their hearts, and by their doing this, the debt of gratitude which I hold to my friends will be a little bit lessened, I believe.

**K. V Abhyankar,**

Gujarat College
Ahmedabad,
January 14,1931

Professor of Sanskrit and
Ardha-Mâgadhî, Gujarat
College, Ahmedabad.



# ॥ ॐ अर्हम् नमः ॥
# ॥ सिरिकुम्मापुत्तचरिअं ॥

नमिऊण वद्धमाणं असुरिंदसुरिंदपणयपयकमलं ।
कुम्मापुत्तचरित्तं वुच्छामि अहं समासेणं ॥ १ ॥
रायगिहे वरनयरे नयरेहापत्तसयलपुरिसवरे ।
गुणसिलए गुणनिलए समोसढो वद्धमाणजिणो ॥ २ ॥
[3]देवेहिं [4]समोसरणं [5]विहिअं बहुपावकम्मओसरणं ।
मणिकणयरययसारप्पायारपहापरिप्फुरिअं ॥ ३ ॥
तत्थ निविट्ठो वीरो कणयसरीरो समुद्दगंभीरो ।
दाणाइचउपयारं कहेइ धम्मं परमरम्मं ॥ ४ ॥
दाणतवसीलभावणभेएहिं चउव्विहो हवइ धम्मो ।
सव्वेसु तेसु भावो महप्पभावो मुणेयव्वो ॥ ५ ॥
भावो भवुदहितरणी भावो सग्गापवग्गपुरसरणी ।
भवियाणं मणचिंतिअअचिंतचिंतामणी भावो ॥ ६ ॥
भावेण कुम्मपुत्तो अवगयतत्तो य अगहियचरित्तो ।
गिहवासे वि वसंतो संपत्तो केवलं नाणं ॥ ७ ॥

---

१ अ. पुत्तस्स चरिय छ. पुत्तचरियं २ अ. रेसा ३ ट. देविंद ४ ब. समवसरणं ५ अ. विविहं ६ क ख च. रयणसारं ७ ज त थ. सारप्पाकार ८ छ ट ब चउप्पयारं ९ ख पुरिसरणी १० अ क ग थ. अवगयतत्तो अगहिअचारित्तो; त. अवगयतित्तो अगहिय. ११ ग गिहिवासे.

इत्थंतरे इंदभूई नाम अणगारे भगवओ महावीरस्स जिट्ठे अंतेवासी गोयमगुत्ते समचउरससरीरे वज्जरिसहनारायसघयणे कणयपुलयनिघसपम्हगोरे उग्गतवे दित्ततवे महातवे घोरतवे घोरतवस्सी घोरबभचेरवासी उच्छूढसरीरे संखित्तविउलतेउल्लेस्से चउदसपुव्वी चउणाणोवगए पचहिं अणगारसएहिं सद्धिं सपरिवुडे छट्ठछट्ठेण अप्पाणं भावेमाणे उट्ठाए उट्ठेइ। उट्ठित्ता

१ अ पुस्तके "इ थंतरे इदभूई नाम पयाहिण करेइ" इत्यादिक-गद्यग्रन्थस्य स्थाने 'तेण कालेण तेण समएण समणस्स भगवओ महावीरस्स जिट्ठे अंतेवासी इदभूई णाम अणगारे गोयमो गोत्तेण सत्तुस्सेहे समचउरससठाणसठिए वज्जरिसहनारायसघयणे कणयपुलयनिघस पम्हगोरे उग्गतवे दित्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सी घोरबभेचरवासी उच्छूढसरीरे सखित्तविउलतेउलेस्से चउदसपुव्वी चउणाणोवगए सव्वक्खरसनिवाई पचहि अणगारसएहि सद्धि सपरिवुडे छट्ठछट्ठेण अप्पाण भावेमाणे समणस्स भगवओ महावीरस्स अदूरसामते उड्ढजाणू अहोसिरे झाणकोट्ठोवगए सजमेण तवसा अप्पाण भविमाणे विहरइ। तए ण से भयव गोयमे जायसड्ढे जायससए जायकोउहल्ले उप्पण्णसड्ढे उप्पण्णससए उप्पण्णकोउहल्ले सजायसड्ढे सजायससए सजायकोउहल्ले समुप्पण्णसड्ढे समुप्पण्णससए समुप्पण्ण कोउहल्ले उट्ठाए उट्ठेति। उट्ठाए उट्ठित्ता जेणेव समणे भयव महावीरे तेणेव उवागच्छइ। उवागच्छित्ता समण भगव महावीर तिक्खुत्तो आयाहिणपयाहिण करेइ करित्ता वदइ णमसइ। वदित्ता णमसित्ता णच्चासण्णे णाइदूरे सुस्सूसमाणे अभिमुहे विणएण पजलिउडे पज्जुवासमाणे एव वयासी—"इति पाठो दृश्यते। २ क ग घ ब कणगपुलगनियस ३ त ट तउल्लस्से

